दीपनमस्कारः
ॐ नमो ज्ञानदीपाय शिवाय ब्रह्मतेजसे ।
कविष्णुहररूपाय नमः श्रीगुरुमूर्तये ॥ १॥
अज्ञानध्वान्तपटलविध्वंसनदिवाकरान् ।
सच्चिदानन्दबोधैकसुधाम्बुधिकलानिधीन् ॥ २॥
आधिव्याधिभयग्रस्त प्रपन्नजनरक्षकान् ।
वन्दे बद्धाऽञ्जलिः श्रीमत्परिज्ञानाश्रमान् गुरून् ॥ ३॥
इलापातालनाकस्थपूजित श्रीशिवेशितुः ।
चरणाम्बुरुहन्यस्त मनोवाक्कायसम्भ्रमान् ॥ ४॥
ईश्वरान् वेदवेदाङ्गवेदान्तज्ञानिनां धुरि ।
छात्रवृन्दसुखाधारान् भजे श्रीशङ्कराश्रमान् ॥ ५॥
उपमाभावमहिमजितसर्वारिमण्डलान् ।
सारस्वतद्विजवरैराराधितपदाम्बुजान् ॥ ६॥
ऊर्जस्वलान्महामोहग्राहग्रासैककर्मणि ।
नमाध्यानन्दरूपान् श्रीपरिज्ञानाश्रमान्गुरून् ॥ ७॥
एकस्मिन्नद्वितीये च ब्रह्मण्याविष्टमानसान् ।
यमादियशेसम्पत्तिभ्राजमानमुनीश्वरान् ॥ ८॥
ऐश्वर्ह्यर्याद्यखिलार्थानां दायकान् करुणानिधीन् ।
ईडे योगाम्बुधिक्रीडासक्तान् श्रीशङ्कराश्रमान् ॥ । ९॥
ओजस्विनः सुतपसा द्वैताब्धिवाडवानलान् ।
स्वाऽघ्र्यब्जशरणोद्धर्तॄन् स्तौमि श्रीकेशवाश्रमान् ॥ १०॥
औपाधिके कर्मगर्ते मोहितभ्रान्तचेतसाम् ।
समुद्धरणधौरेयान् वन्दे श्री वामनाश्रमान् ॥ ११॥
अञ्जसा तमसः पारमनायासेन सर्वदा ।
नृपशून्ययतो नौमि कृष्णाश्रमयतीश्वरान् ॥ १२॥
अहं वन्दे मनोवाग्भ्यां पाण्डुरङ्गाश्रमान्मुहुः ।
संस्तवैः परया भक्त्या विविधैर्भक्तिलक्षणैः ॥ १३॥
करकञ्जभवांस्तेषां वन्दे धर्मधुरन्धरान् ।
आनन्दरूपिणः श्रीमदानन्दाश्रमसद्गुरून् ॥ १४॥
खब्रह्माविष्टहृदयान् द्वैतध्वान्त दिवाकरान् ।
प्रशान्त दान्तोपरतान् परिज्ञानाश्रमान्नुमः ॥ १५॥
गरिमा दृश्यते येषां वेदान्तार्थनिरूपणे ।
संवित् ज्ञानतपोदीप्तान् निगमागमपारगान् ॥ १६॥
संविद्देवी समासक्तान् श्रुत्यन्तपथदर्शकान् ।
सद्योजातान् नमाम्यत्र शङ्कराश्रमदेशिकान् ॥ १७॥
॥ भोः पराक् स्वामिन् पराक् ॥

इति दीपनमस्कारः सम्पूर्णः ।